करुणावशाच्छेरतेएतादृशीयमतिकरुणावतीरात्रिरस्तीति ॥५॥ यावयेति ॥ हेऊर्म्यैरात्रिनामैतत् चिच्छक्तिरात्रिरूपिणीभुवनेश्वरीयस्मात्त्वमतिदयावतीत स्मादस्माकमपिपामराणांकिंचिदपिकृतमनवेक्ष्यवृक्यंवृकस्यस्त्रियंनानावासनारूपांवृकंचवृकवन्मारकंपापंचास्मान्हिंसंतंयावयअस्मत्तः पृथक्कुरु ॥ तथास्ते नंतस्करंचित्तापहारकंकामादिकंचयावयास्मत्तोवियोजय ॥ अथानंतरंनोस्माकंसुतरासुखेनतरणीयाक्षेमकरीमोक्षदात्रीभव ॥६॥ हेरात्रिचिच्छक्तेभुवनेश्वरि पेपिशत्भृशंपिंशत्सर्ववस्तुषुआश्लिष्टंतमोज्ञानंकृष्णंकृष्णवर्णंतमः प्राधान्येनव्यक्तंविशेषेणस्वभासासर्वस्यांजकमीदृशंज्ञानंमाउपास्थितउपागच्छत् ॥ हेउषः रात्रिदेवतेत्वंमृणेवऋणानीवतत्त्वंयातयापगमय यथास्तोतॄणामृणानिधनप्रदानेनापाकरोषितथाममाज्ञानमपि अपसारयेत्यर्थः ॥ ७ ॥ उपतेगाइति ॥ हेरा त्रिचिच्छक्तेभुवनेश्वरितेत्वांगाइवपयसोदोग्ध्रीर्धेनूरिवउपेत्याकरंस्तुतिजपादिभिरभिमुखीकरोमि ॥ हेदिवः परमाकाशरूपपरमात्मनोदुहितःपुत्रि परमात्मप्र

यावयावृक्यं१वृकंयवयस्तेनमूर्म्यें ॥ अथानःसुतराभवः ॥ ६ ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित ॥ उषऋणेवयातय ॥ ७ ॥
उपतेगाइवाकरंवृणीष्वदुहितर्दिवः॥रात्रिस्तोमंनजिग्युषे ॥ ८॥ इति रात्रिसूक्तम् ॥

काशेनचिच्छक्तेरभिव्यज्यमानत्वाद्युक्तंपरमात्मपुत्रीत्वंत्वत्प्रसादात्कामादीन्शत्रून्जिग्युषेममस्तोत्रंनस्तोत्रमिवहविरपियथाशक्तिदत्तंवृणीष्वभजेति ॥ ८ ॥ इतिरात्रिसूक्तभाष्यंसमाप्तिमगमत् ॥ ग्रीवायांमधुसूदनोस्यशिरसिश्रीनीलकंठःस्थितः श्रीदेवीगिरिजाललाटफलकेवक्षःस्थलेशारदा ॥ षड्वक्त्रोमणिबंधसं धिषुतथानागास्तुपार्श्वस्थिताः कर्णौयस्यतुचाश्विनौसभगवान्सिंहोममास्तिवष्टदः ॥ १ ॥ यन्नेत्रेशशिभास्करौवसुकुलंदंतेषुयस्यस्थितंजिह्वायांवरुणस्तुहुंकृ तिरियंश्रीचर्चिकाचंडिका ॥ गंडौयक्षयमौतथोष्ठयुगुलंसंध्याद्वयंपृष्ठकेवज्रीयस्यविराजतेसभगवान्सिंहोममास्तिवष्टदः ॥ २ ॥ श्रीवासंधिषुसप्तविंशतिमतान्यृ क्षाणिसाध्याहृदिप्रौढानिर्घृणतातमोस्यतुमहाक्रौर्यैःसमाःपूतनाः ॥ प्राणेयस्यतुमातरःपितृकुलंयस्यास्त्यपानात्मकंरूपेश्रीकमलाकचेषुविमलास्तेस्यूरवे रश्मयः ॥ ३ ॥ इतिदेवीपुराणेदेवीवाहनसिंहध्यानम् ॥

इयं नागोजीभट्टकृतव्याख्यासमेता नीलकण्ठकृतटीका-
सहिताङ्गषट्कसहिता सभाष्यदेवीसूक्तरात्रिसूक्तसहिता
च दुर्गासप्तशती मुम्बय्यां श्रीकृष्णदासात्मजेन खेम-
राजेन स्वकीये 'श्रीवेङ्कटेश्वर' यन्त्रालयेऽङ्कित्वा प्रका-
शिता. संवत् १९५२, शके १८१७, सन् १८९५.

॥ इति श्रीनागोजीभट्टकृतव्याख्यासहिता दुर्गासप्तशती समाप्ता ॥

अत्र च सटीकांगषट्कं सभाष्यं देवीसूक्तं रात्रिसूक्तं च निवेशितमस्माभिः ।